



भर्त्तुः प्रणाशादथ शोचनीयं
दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥

मूलस्य पाठान्तरम्—अथ—अनु ( Nand. )

**Prose order.**—अथ दाशरथी उपघ्नतरोः छेदात् व्रतत्यौ इव, भर्त्तुः प्रणाशात् शोचनीयं दशान्तरं प्रपन्ने जनन्यौ तत्र समम् अपश्यताम् ।

**Exaplanation by use of synonyms**.—अथ (उपवनाधिष्ठानानन्तरं ) दाशरथी ( दशरथपुत्रौ रामलक्ष्मणौ ) उपघ्नतरोः ( आश्रयवृक्षस्य ) छेदात् ( कर्त्तनात ) व्रतत्यौ इव ( लते इव ) भर्त्तुः ( स्वामिनो दशरथस्य ) प्रणाशात् ( मरणात् ) शोचनीयं (दुःखजनकं ) दशान्तरम् ( अवस्थान्तरं ) प्रपन्ने (प्राप्ते) जनन्यौ ( मातरौ ) तत्र ( तस्मिन् अयोध्योपवने ) समं ( युगपत् ) अपश्यताम् ( अवालोकयताम्) ।

**Substance.**—रामलक्ष्मणौ अयोध्याया उपवनेऽधिष्ठानानन्तरं स्वामिवियोगात् निरालम्बं शोचनीयावस्थं मातृद्वयं सममवलोकयामासतुः। यथा हि आश्रयभूतस्य तरोश्छेदनात लताद्वयं निरालम्बमतएव भुवि पतितं धूलिधूसरितं शोषपर्यन्तं सत् किमप्यवस्थान्तरं प्राप्नोति, तथा आश्रयतरुकल्पपतिवियोगादवलम्बनशून्यं कौसल्यासुमित्राख्यं जननीद्वयं विवर्णं हतप्रभं रूक्षवेशञ्च सत् कामपि शोचनीयामवस्थां भेजे ।

**Sanjivani.**—सञ्जीवनं मेघि कन्यकायाः सौन्दर्यं विश्वमहाभिधानम् ।
प्रणाम्यपादौ रघुवर्य्योः समानं रामस्य वन्दे रमणीयमास्यम् ॥

भर्त्तुरिति। ( अथ ) उपवनाधिष्ठानानन्तरं ( दाशरथी ) रामलक्ष्मणौ ( उपघ्नतरोः ) आश्रयवृक्षस्य,—"उपघ्न आश्रये" ( ३।३।८५।पा. ) इति निपातः—( छेदात् ) [ कर्त्तनात् ] ( व्रतत्यौ ) लते ( इव )—"वल्ली तु व्रततिर्लता" इत्यमरः—( भर्त्तुः ) दशरथस्य, प्रणाशात् [ मरणात् ] ( शोचनीयं ) [ शोकोत्पादकं ]

( दशान्तरम् ) अवस्थान्तरं—"अवस्थायां वस्त्रान्ते स्याद्दशापि"—इति विश्वः— ( प्रपन्ने ) प्राप्ते ( जनन्यौ ) कौसल्यासुमित्रे ( तत्र ) साकेतोपवने ( सम ) युगपत् ( अपश्यताम् ) [ अवालोकयताम् ] दृशेः कर्त्तरि लङ् ॥ १ ॥

**Sanjivani Explained.**—(1) "उपघ्न आश्रये"—[The word उपघ्न is formed anomalously in the sense of आश्रय ( support.

( 2 ) "वल्ली .लता"—The words वल्ली, व्रतति and लता are synonymous which mean a creeper.

(3) "अवस्थायां वस्त्रान्ते स्याद्दशापि"—दशा is also used in the senses of अवस्था (circumstance), and वस्त्रान्त (border of cloth). The force of अपि indicates that the word दशा is here used in feminine singular It is used also in feminine plural.

(3) साकेतोपवने—In the garden of साकेत (Ayodhyá).

**Beng li.**—অনন্তর দশরথাত্মজ রাম এবং লক্ষ্মণ, আশ্রয়তরুচ্ছেদে ব্রততীদ্বয়ের ন্যায়, পতিবিনাশে শোচনীয় দশান্তর প্রাপ্ত মাতৃদ্বয়কে তথায় যুগপৎ অবলোকন করিয়াছিলেন। ১।

**English rendering.**—Then the two sons of Dasaratha (*i. e.* Ráma and Lakshmana) there together had an interview with their mothers who had attained a lamentable change of condition in consequence of the death of their husband like a pair of creepers at the felling of the tree which was their support. (1)

## Grammatical notes, &c. &c.

**Sans'k .**—(1) प्रकर्षेण ना . प्रणाशः ( प्रादिः ) तस्मात् ( 2 ) अन्या दशा दशान्तरम् ( मयूरव्यंसकादित्वात् समासः ) [ *V.* रसान्तराणि, X, 17. ] (3) दाशरथिश्च दाशरथिश्च तौ दाशरथी ( एकशेषद्वन्द्वः ) ( 4 ) जननी च जननी च ते जनन्यौ ( एकशेषद्वन्द्वः ) ( 5 ) उपघ्नश्चासौ तरुश्चेति उपघ्नतरुः ( कर्मधा ) तस्य ( 6 ) व्रतती च व्रतती च ते व्रतत्यौ ( एकशेषद्वन्द्वः ) ।

**Case-ending.**—( 1 ) भर्त्तुः— कृद्योगे कर्त्तरि षष्ठी—घञ् is a कृत affix which is admitted to the root नश् of प्रणाश । भर्त्ता प्रणश्यति भर्त्तु. प्रणाशः—"कर्त्तृकर्मणोः कृति" ( *V.* कार्य्यसिद्धेः, X, 6. ) ( 2

कुमुद्वतीशीतमरीचिलेखे
दिवेव रूपान्तरदुर्विभाव्ये" ॥

☞This Canto is composed in the metre उपजाति (V. XII, I.) The last S'loka of this Canto is composed in मन्दाक्रान्ता ।

**Remark**—In the garden outside of Ayodhyá which had been fixed for the temporary abode of Ráma and Lakshmana, the two brothers together met their mothers. A lamentable change was noticed in their appearance in consequence of the death of their father. The poet compares their condition to that of a pair of creepers which fall to the ground, torn and helpless when the tree that was their support is cut down. The comparison is beautiful.

उभावुभाभ्यां प्रणतौ हतारी
यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ
ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥

मूलस्य पाठान्तरम्—सुतस्पर्शसुखो—सुतस्पर्शरसो, मुखस्पर्शसुखो ( Nand. ) विस्पष्टमस्रान्धतया—बिदि ष्टमश्रान्ततया ( Vijay. ) ।

**Prose order**.—यथाक्रमं प्रणतौ हतारी विक्रमशोभिनौ तौ उभौ उभाभ्यां ( मातृभ्याम् ) अस्रान्धतया विस्पष्टं न दृष्टौ, ( किन्तु ) सुतस्पर्शसुखोपलम्भात् ज्ञातौ ।

**xaplanation by use of ynonyms.**—यथाक्रमं ( स्वस्वमातृपूर्ब्बक ) प्रणतौ ( नमस्कृतवन्तौ ) हतारी ( विध्वस्तशत्रुकौ ) विक्रमशोभिनौ ( पराक्रमविराजिनौ ) तौ उभौ ( द्वौ रामलक्ष्मणौ ) उभाभ्यां ( द्वाभ्यां मातृभ्याम् ) अस्रान्धतया ( अश्रुनिर्दृष्टिरोधतया ) विस्पष्टं ( समीचीनतरं ) न दृष्टौ ( नावलोकितौ ), किन्तु, सुतस्पर्शसुखोपलम्भात् ( पुत्रगात्रस्पर्शानन्दानुभवात् ज्ञातौ ( बुद्धौ ) ।

**ubstance.**—विध्वस्त शत्रुकौ शौर्य्येण जगति प्रथितौ तौ रामलक्ष्मणौ यदा

स्वस्वमातरं नमस्कुर्वतोस्तदा कौशल्यासुमित्रे वाष्पाकुललोचनतया एवमुपरुद्धदृष्टी जाते यत्ते स्वस्वतनय द्रष्टुं न शेकतुः, परं तद्गात्रस्पर्शजसुखानुभावात् स्वस्वपुत्र इति बुबुधाते ।

anjivani.—उभाविति । ( यथाक्रमं ) स्वस्वमातृपूर्व्वकं ( प्रणतौ ) नमस्कृतवन्तौ (हतारी ) हतशत्रुकौ ( विक्रमशोभिनौ ) [ शौर्य्येण जगति प्रसिद्धौ ] ( ताउभौ ) रामलक्ष्मणौ ( उभाभ्यां ) मातृभ्याम्, अस्रैः, अश्रुभिः अन्धतया हेतुना [ अ न्धतया ] [ अश्रुभि. दृष्टिरोधतया ]—"अस्रमश्रु च शोणितम" इति यादव.—( विस्पष्ट ) [ सम्यक् ] ( न दृष्टौ ) [ नावलोकितौ ], किन्तु सुतस्पर्शेन यत्सुखं तस्य उपलम्भात्, अनुभवात् [ सुतस्पर्शसुखोपलम्भात् ] [ पुत्रगात्रस्पर्शजानन्दानुभवात् ] ( ज्ञातौ ) [ बुद्धौ ] ॥ २ ॥

anjivani xplained.—( 1 ) 'अस्रमश्रु च शोणितम्'—अस्र means अश्रु ( tears ) as well as शोणित ( blood ).

Beng li.—যথাক্রমে প্রণত হতশত্রুক এবং বিক্রমশোভী তাঁহাদিগের উভয়কে, মাতৃদ্বয়, নেত্রনীরে দৃষ্ট্যন্ধতাহেতু সুস্পষ্ট অবলোকন করিতে পারেন নাই, ( কিন্তু ) সুতস্পর্শসুখানুভবহেতু ( স্ব স্ব পুত্র বলিয়া ) জানিতে পারিয়াছিলেন ।২।

nglish rendering.—The two ( brothers ) who had killed their enemies and were resplendent with (the glory of) their prowess while respectively bowing down ( to their mothers ) were not distinctly seen by them both ( the mothers ), in consequence of tears blinding thir eyes but they were recognised ( as such ) by reason of their feeling a delightful sensation caused by the touch of a son. (2).

## Grrmmatical notes, &c. &c.

am s —(1) हताः अरयः याभ्यां तौ हतारी (बहु) (2) क्रममनतिक्रम्य यथाक्रमम् ( अव्ययीभावः ) (3) विक्रमेण शोभेते इति विक्रमशोभिनौ (उपपद) (4) स च स च तौ (ए शेषद्वन्द्वः) (5) विशेषे स्पष्टं विस्पष्टम् (प्रादि ) ( 6 ) अ ैः अन्धं अस्रान्धं( तृतीयातत् ) तयोर्भावः अस्रान्धता, तया ( 7 )

सुतयो स्पर्शः सुतस्पर्शः (षष्ठीतत्) तेन सुख सुतस्पर्शसुखम् (तृतीयातत्) तस्य उपलम्भ. सुतस्पर्शसुखोपलम्भ. (षष्ठीतत्) तस्मात् ।

**Case-ending**—(1) उभौ—उक्ते कर्मणि प्रथमा (2) यथाक्रमम्—अव्ययं, क्रियाविशेषणम् (3) उभाभ्याम्—अनुक्ते कर्त्तरि तृतीया (4) प्रणतौ, हन्तारौ, विक्रमशोभिनौ and तौ qualify उभौ (5) विस्पष्टम्—क्रियाविशेषणं 'दर्शन' क्रियाया. (6) अश्राम्यतया—हेतौ तृतीया (7) सुतस्पर्शसुखोपलम्भात्—हेतौ पञ्चमी ।

**Different meanings**.—(1) अस्र—'अ : को ̀ कचे पुंसि क्लीवमश्रुणि शोणिते' । (मे०) ।

**Derivation**.—(1) प्रणतौ—प्र + नम् + क्तः (कर्त्तरि, 1st c dual) (2) विक्रमशोभिनौ—वि + क्रम् + घञ् (भावे) = विक्रम.—The penultimate vowel of the root is not lengthened by the rule—"नोदात्तोपदेशस्य मान्तस्यानाचमेः" (७।३।३४पा०) [The roots that are उदात्तोपदेश do not get their penultimate vowels lengthened in alliance with the affix चिण्, and such कृत् affixes whose ञ् or ण् elides. This is not applicable to the root चम् with आ] This rule is not enforced in the case of the root गम् because it is not उदात्तोपदेश । विक्रम + शुभ् + णिनिः (ताच्छील्ये, 1st c. dual) (3) विस्पष्टम्—वि + स्पश् + णिच् + क्त. (निपात्यते)—पक्षे विस्पाशितम by the rule—"दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" (७।२।२७ पा०) (4) ज्ञातौ ज्ञा + क्त (कर्मणि, 1st c. dual) (5) उपलम्भ.—उप + लभ् + घञ्—नुम् comes to the root by the rule,—"उपसर्गात् खल्घञोः" (P. X, 2.) ।

**Conjugation**.—(1) ज्ञा (to know) जानाति, जानीते (लट्) जज्ञौ, जज्ञे (लिट्) अजानात्, अजानीत (लङ्) ज्ञास्यति-ते (लृट्) अज्ञासीत्, अज्ञासिष्ट (लुङ्) जिज्ञासते (सन्-लट्) जाज्ञायते (यङ्-लट्) ज्ञापयति (णिच्-लट्) अजिज्ञपत् (णिच्-लुङ्) ज्ञातः (क्तः) ।

**Change of voice**. .. .. उभे.. .. दृष्टवत्यौ, . . . . .ज्ञातवत्यौ ।

**Remark**.—The idea is this: As soon as Ráma and Lakshmana made their appearance before their mothers, and saluted them respectively, the eyes of the ladies filled with

tears of joy and were literally blinded, which prevented them from seeing them distinctly. But they recognised them to be their sons from the agreeable sensation which they experienced when they touched them with their hands, as mothers generally do The mere touch of a son causes a delightful sensation in the mind, and the experience of this delightful sensation convinced them that the two who were bowing down before them were their respective sons.

आनन्दजः शोकजमश्रु बाष्प-
स्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं
हिमाद्रिनिस्यन्द इवावतीर्णः ॥ ३ ॥

मूलस्य पाठान्तम्—निस्यन्द—निस्पन्द (He. Chá. Din. Va. Su. Vijay. Dhar.) ।

**Prose order.**—तयोः आनन्दजः शिशिरः वाष्पः शोकजम् अशीतम् अश्रु, गङ्गासरय्वोः उष्णतप्तं जलम् अवतीर्णः हिमाद्रिनिस्यन्द इव, बिभेद । Mallinátha places 'उष्णतप्तम्' before 'गङ्गासरय्वोः' ।

**Exaplanation by u e of synonyms:**—तयोः (मात्रोः) आनन्दजः (पुत्रदर्शनहर्षाज्जातः) शिशिरः (शीतलः) वाष्पः (नयनवारि) शोकजं (शोकाज्जातम्) अशीतम् (उष्णम्) अश्रु (नेत्रनीरं) गङ्गासरय्वोः, उष्णतप्तं (निदाघोष्णं) ज (वारि) अवतीर्णः (अवरूढः) हिमाद्रि-निस्यन्द इव (हिमाचलनिर्भर इव), बिभेद (भित्त्वा प्रससार) ।

**ubstance.**—यथा हि शीतं निर्झरवारि हिमाचलात् निर्ग गङ्गासरय्वोर्निदाघतप्तं जलं भित्त्वा प्रसारं लभते, तथा पुत्रमुखचन्द्रदर्शनात् कौशल्यासुमित्रयोः आनन्दजं सुशीतलं नयननीरं सवेगं निर्गत्य शो जमुष्णं वाष्पं दूरीकृत्य प्रसृतिं मे । पुत्रमुखदर्शनेन तयोर्मात्रोः शोक नेत्रजलं दूरीभूयानन्दजास्रु निर्जगामेति ।

**Sanjivani.**—आनन्द इति । (तयो.) मात्रोः (आनन्दजः),

[ हर्षाज्जात: ] ( शिशिर: ) [ शीतल: ] ( वाष्प ) [ नेत्रनीरं ] ( शो जं ) [ शोकजातम् ] ( अ शीतम् ) उष्णम् ( अस्रु ) [ नयनजलम् ] ( उष्णतप्तं ) शीष्मतप्तं ( गङ्गासरय्वोः ज ं ) [ नीरं ] कर्म ( अवतीर्ण: ) [ अवरूढ़ ] हिमाद्रे· निस्यन्द निर्झर इव [ हिमाद्रिनिस्यन्द इव ] [ हिमाचलनिर्झरवत् ] ( विभेद ) [ भित्त्वा प्रससार ] आनन्देन शोकस्तिरस्कृत इत्यर्थः ॥ ३ ॥

**njiv ni plained**:—( 1 ) 'आनन्देन . तिरस्कृत'—Their grief was chastised *i. e.* driven away, as it were by their joy.

**eng li.**—তাঁহাদিগের আনন্দজনিত শীতলনেত্রাম্বু, শোকজনিত উষ্ণ অশ্রুকে, গঙ্গাসরযূর নিদাঘোত্তপ্ত সলিলমধ্যে প্রবিষ্ট হিমাদ্রিনির্ঝরের ন্যায়, ভেদ করিয়াছিল। ৩।

**ngli h r ndering.**—Their cool tears of joy displaced the hot tears of sorrow, just as the fountain-flow of the Himálaya ( the snowy mountain ), descending into the Ganges and the Jamuna, pierces through ( *i. e.* pervades over ) their summer-heated waters (3).

## r m tical notes, &c., &c.,

**s .**—(1) आनन्दात् जात आनन्दज: ( उपपद ) ( 2 ) शोकात् जातं शोकजम् ( उपपद ) ( 3 ) न शीतम् अशीतम् ( नञ्तत् ) ( 4 ) गङ्गा च सरयूश्च गङ्गासरय्वौ ( द्वन्द्व: ) तयो ( 5 ) उष्णे, निदाघे तप्तम् उष्णतप्तम् ( सप्तमीतत् ) ( 6 ) हिमस्य अद्रि· हिमाद्रि ( षष्ठीतत् ) तस्य निस्यन्द: हिमाद्रिनिस्यन्द· ( षष्ठीतत् )।

**Cas -ending.**—( 1 ) वाष्प.—This is उद्देश्य and उपमेय कर्त्ता having for its विधेय and उपमानकर्त्ता, हिमाद्रिनिस्यन्द: ( 2 ) अस्रु—This is उद्देश्य and उपमेयकर्म्म having for its विधेय and उपमान र्म, जलम् ( 3 ) तयोः—शेषे षष्ठी 'वाष्प and अस्रु' इत्येताभ्यां सम्बन्ध:—This is उद्देश्य and उपमेयपद, having for its विधेय and उपमानपद, गङ्गासरय्वोः which is शेषे षष्ठी 'जलम्' इत्यनेन . म्बन्ध· ( 4 ) आनन्द . and शिशिर: qualify वाष्प: ( 5 ) अशीतं and शोकजम्

qualify अश्रु which is the object of विभेद (6) उष्णतप्तम् qualifies जलम् (7) अवतीर्ण. qualifies हिमाद्रिनिस्यन्द. ।

**Different meanings.**—(1) उष्ण—'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक' (मे०)।

**Derivaion.**—(1) आनन्दज —आनन्द + जन् + ड. (कर्त्तरि, भूते) (2) अशीतम्—श्यै + क्त (कर्त्तरि) श्यै changes into शी by the rule—"द्रवमूर्त्तिस्पर्शयो श्य." (६।१।२४।पा०) [In the senses of condensation of a liquid matter and touch the root श्य gets सम्प्रसारण, *i. e.* it is changed into शी] न + शीतम् (3) शिशिर.— श् + किरच्—The penultimate vowel of the root changes into इ by निपातन (4) विभेद—भिद् + लिट्-णल् (5) उष्ण —उष् + नक्—In the sense of the summer season this word in masculine, but in the senses of दक्ष and अशीत it is of the same gender as its noun (6) निस्यन्द —नि + स्यन्द् + अच् (7) अवतीर्ण —अव + तॄ + क्त: (कर्त्तरि)।

**Conjugation.**—(1) भिद्—(*V.* X, 82.)।

**Change of voic .**—.... आनन्दजेन शिशिरे वाष्पे .... अवतीर्णेन हिमाद्रिनिस्यन्देन. बिभिदे।

**imile.**—Here वाष्प is compared to हिमाद्रिनिस्यन्द, अश्रु to जलम् and कौशल्या and सुमित्रा to गङ्गा and सरयू। Their common virtue is भिन्नता। As the cold torrent of melted snow descending from the Himálaya enters into the hot waters of the Ganges and the Sarayu, in summer, and displaces them, so the cool tears of joy of the two mothers overpowered the scalding tears of grief. At the sight of their sons, tears of joy gushed out from the eyes of the mothers, thereby displacing, as it were, their tears of grief.

**Remark**:—Kálidása is fond of similes, and his comparisons are always very happy. Kausalyá and Sumitrá had been hitherto shedding tears of grief in consequence of the death of their husband and the exile of their sons; but their

grief suddenly changed into joy when they both saw their sons return from exile. This is the plain meaning But mark, how the poet brings it home to the reader's mind by means of his beautiful similes.

ते पुत्रयोर्नैरृतशस्त्रमार्गा-
नार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाङ्गनानां
न वीरसूशब्दमकामयेताम् ॥ ४ ॥

मूलस्य पाठान्तरम्—Nandargikara cites from his manuscript this S'loka in a slightly different way —

"ते पुत्रयोर्नैरृतशस्त्रमार्गान्
स्थिरप्ररूढानपि वत्सलत्वात् ।
आर्द्रानिवाङ्गे सदयं स्पृशन्त्यौ
भूयस्तयोर्जन्म समर्थयताम्" ॥

मार्गान्—व्रातान्, अकामयेताम्—अकारयेताम्, अपाकरोति ( Nand. )

**Prose order.**—ते पुत्रयोः अङ्गे नैरृतशस्त्रमार्गान् आर्द्रान् इव सदयं स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितम् अपि वीरसूशब्दं न अकामयेताम् ।

**Explanation by use of synonyms.**—ते ( मातरौ ) पुत्रयोः ( रामलक्ष्मणयोः ) अङ्गे ( गात्रे ) नैरृतशस्त्रमार्गान् ( राक्षसशस्त्रव्रणान् ) आर्द्रानिव ( सरसानिव ) सदयं ( धीरं ) स्पृशन्त्यौ ( परामृशन्त्यौ ) क्षत्रकुलाङ्गनानां ( क्षत्रवंशीयरमणीनाम् ) ईप्सितमपि ( अभिलषितमपि ) वीरसूशब्दं ( वीरमातेति शब्दं ) न अकामयेतां ( न प्रार्थितवत्यौ ) ।

**Substance.**—चिराद्वनवासात् प्रत्यागतौ प्रणतौ राजकुमारावुत्थाप्य तौ मातरौ तयोरङ्गेषु राक्षसायुधप्रहारक्षतचिह्नान्यविशुष्काणीव मत्वा सदयं तयोः शरीरं परामृष्टवत्यौ । यद्यपि वीरधर्म्मः क्षत्रकुलरमणीनां नितरामभिलषितस्तथापि तयोः कुमारयोः सुकोमलाङ्गेषु तादृशानि क्षतचिह्नान्यालोक्य ते पुत्रवात्सल्यात् वीरमातेति शब्दं न कामयाञ्चक्राते । वीरप्रसवो दुःखहेतुरिति ते बुबुधाते ।

**Sanjivani.**—ते इति । (ते) मातरौ (पुत्रयो) [सुतयो] (अङ्गे) शरीरे, नैर्ऋतशस्त्राणां, राक्षसशस्त्राणां, मार्गान्, व्रणान् [नैर्ऋतशस्त्रमार्गान्] [राक्षसायुधप्रहारक्षतानि] (आर्द्रान्) सरसान् (इव), (सदयं स्पृशन्त्यौ) [धीरं परामृशन्त्यौ] (क्षत्रकुलाङ्गनानां) [क्षत्रवंशीयरमणीनाम्] (ईप्सितम्) इष्टम् (अपि) वीरसू. वीरमातेतिशब्दं [वीरसूशब्दं] (न अकामयेतां) [न प्रार्थितवत्यौ]—वीरप्रसवौ दुःखहेतुरिति भाव ॥४॥

**Bengali.**—তাঁহারা পুত্রদ্বয়ের অঙ্গে রাক্ষসশস্ত্রাঘাতজনিত ক্ষত-সমূহকে যেন সরস (তাজা) জ্ঞান করিয়া অতিধীরে স্পর্শ করিতে করিতে, 'বীরপ্রসবিনী' এই শব্দটী ক্ষত্রকুলাঙ্গনাগণের অভিলষিত হইলেও, (উহা) প্রার্থনা করেন নাই। ৪।

**English rendering**—While touching with tenderness the scars inflicted by the weapons of the demons on the bodies of their sons, as if they were still fresh, they did not long for the title of "mothers of heroes", though it is (highly) coveted by all women of the Kshatriya race. (4).

**ram tic l notes, &c, &c.**

**Sama'sa.**—(1) सा च सा च ते (एकशेषद्वन्द्वः) (2) पुत्रश्च पुत्रश्च तौ पुत्रौ (एकशेषद्वन्द्वः) तयोः (3) नैर्ऋतानां शस्त्राणि नैर्ऋतशस्त्राणि (षष्ठीतत्) तेषां मार्गाः नैर्ऋतशस्त्रमार्गाः (षष्ठीतत्) तान् (4) दयया सह वर्त्तमानं सदयम् (बहु) (5) क्षत्राणां कुलं क्षत्रकुलम् (षष्ठीतत्) तस्य अङ्गनाः क्षत्रकुलाङ्गनाः (षष्ठीतत्) तासाम् (6) वीरान् सूते इति वीरसूः (उपपद) वीरसूरितिशब्दः वीरसूशब्दः (कर्म्मधा) तम् ।

**Case-ending.**—(1) पुत्रयोः—शेषे षष्ठी 'अङ्ग' इत्यनेन सम्बन्ध. (2) आर्द्रान् qualifies नैर्ऋतशस्त्रमार्गान् which is the object of स्पृशन्त्यौ which is formed by शतृ (3) सदयम्—Adverb qualifying the verb स्पर्शन (4) क्षत्रकुलाङ्गनानाम्—"वर्त्तमानविहितमत्यर्थक 'क्त' प्रत्ययान्तस्य 'ईप्सितम्' इतिपदस्य योगे कर्त्तरि षष्ठी—'क्तस्य च वर्त्तमाने" 'मतिबुद्धिपूजार्थेभ्यश्च" (*V.* तद्ध, X, 55.) ईप्सितम् qualifies वीरसूशब्दम् which is the object of अकामयेताम् ।

**Derivation.**—(1) नैर्ऋतः—(*V.* X, 34.) (2) आर्द्रान्—

अह् + र (2nd c. p )—अ of the root is lengthened. 'अर्हेर्दीर्घश्च' (उ. २।१८) (3) सृशन्तौ—स्पृश् + शतृ + ङीप् (1st c. dual) (4) ईप्सितम्—आप् + सन् + क्त (कर्मणि) (5) अङ्गना—अङ्ग + न (प्राशस्त्ये) + टाप् (6) वीरसू:—वीर + सू + क्विप् (कर्त्तरि) (7) अकामयेताम्—कम् + लङ्—आताम् ।

**Conjugation.**—(1) कम् (to desire) कामयते (लट्) कामयाञ्चक्रे, चकमे (लिट्) कामयिता, कमिता (लुट्) कामयिष्यते, कमिष्यते (लृट्) अचीकमत, अच मत (लुङ्) चिकामयिषते, चिकमिषते (सन्-लट्) चङ्कम्यते (यङ्-लट्) कामयति (णिच्-लट्) कान्तः (क्त.) ।

**Change of voice.**—ताभ्यां स्पृशन्ती (ती) भ्याम् . . ईप्सित ... ... वीरसूशब्द .. .. ..अकाम्यत ।

**R m rk.**—There is a tender touch in this S'loka, which makes it highly pathetic. Kshatriya mothers always covet and are highly proud of the title of "mothers of heroes". Kausalyá and Sumitrá also were not exceptions to this rule. But when they saw the scars of the wounds inflicted on the bodies of their sons by the weapons of the demons, and touched them tenderly, as if they were still fresh, their hearts were so much moved that they did not like to be called "the mothers of heroes" though this title was highly coveted by all Kshatriya women. In other words, the poet means to say that motherly tenderness got the better of the stern and proud feeling that makes every Kshatriya woman covet the title of "mother of heroes."

क्लेशावहा भर्त्तुरलक्षणाहं
सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महि ा-
वभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥

मूलस्य पाठान्तरम्—उदीरयन्ती—उदाहरन्ती (Chá. Va. Su.) स्वर्गप्रतिष्ठस्य—स्वर्गं प्रतिष्ठस्य (Nand)

**Prose order.**—भर्त्तुं क्लेशावहा अ लक्षणा अहं सीता इति स्वं नाम उदीरयन्ती वधू स्वर्गप्रतिष्ठस्य गुरो महिष्यौ अभक्तिभेदेन ववन्दे।

**Explanation by use of synonyms.**—भर्त्तुः (पत्युः) क्लेशावहा (क्लेशकारिणी) अलक्षणा (अशुभचिह्नयुक्ता) अहं, सीतेति स्वं नाम (सीतेति स्वकीयाख्याम्) उदीरयन्ती (उच्चारयन्ती) वधू (स्नुषा) स्वर्गप्रतिष्ठस्य (स्वर्गतस्य) गुरोः (श्वशुरस्य) महिष्यौ (कृताभिषेके राज्ञौ श्वश्र्वाविल्यर्थः) अभक्तिभेदेन (तुल्यया भक्त्या) ववन्दे (अभिवादयाञ्चक्रे)।

**Substance.**—विवाहानन्तर पत्युर्वनवासस्तेनैव शोकेन श्वशुरस्य स्वर्गमनं तेनैव भवत्यो क्लेशावहं निदारुणं वैधव्यञ्च—एतेषां सर्व्वेषामनर्थानां मूलमहमलक्षणा सीता—इति स्वकीयं नामोच्चार्य्य पुत्रवधूर्जानकी स्वर्गतस्य श्वशुरस्य महिष्यौ कौशल्यासुमित्रे नाम श्वश्रू तुल्यया भक्त्या अभिवादयाञ्चक्रे।

**anjivani.**—क्लेशावहेति। आवहतीति आवहा, (भर्त्तुः क्लेशावहा) पत्युः क्लेशकारिणी, अतएव (अलक्षणा) [अशुभचिह्नयुक्ता] (अहं सीतेति स्वं नाम) [जानकीति स्वकीयाख्याम्] (उदीरयन्ती) [उल्लिखन्ती] स्वर्गः प्रतिष्ठा, आस्पदं यस्य तस्य [स्वर्गप्रतिष्ठस्य] स्वर्गस्थितस्य (गुरोः) श्वशुरस्य (महिष्यौ) श्वश्र्वौ (वधूः) स्नुषा—'वधूः स्नुषा वधूर्जाया" इत्यमर — (अभक्तिभेदेन) [तुल्यया भक्त्या] (ववन्दे) [अभिवादयाञ्चक्रे]—स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःख सूचितम्॥ ५॥

**anjivani xplained**—(1) "वधूः .. जाया"—वधू means स्नुषा (daughter-in-law) and जाया (wife)।

(2) "स्वर्गप्रतिष्ठस्य सूचितम्"—By the word स्वर्गप्रतिष्ठस्य the grief at the sight of the widowhood of the mothers' in-law is indicated.

**Bengali.**—পতির ক্লেশদায়িনী (অতএব) অলক্ষণা আমি সীতা,—এই বলিয়া স্বকীয় নাম উল্লেখপূর্ব্বক বধূ (জানকী) স্বর্গত গুরুর মহিষী-দ্বয়কে তুল্যভক্তির সহিত অভিবাদন করিয়াছিলেন। ৫।

**nglish rendering.**—"Here am I, the ill-omened Sitá who brought troubles on my husband," thus uttering her

own name, the daughter-in-law ( Sitá ) saluted, with equal degree of respect, both the queens of her father-in-law, who had been living in heaven. ( 5 ).

## Grammatical notes, &c., &c.

**ama'sa.**—(1) आवहतीति आ. हा, क्लेशस्य आवहा क्लेशावहा ( षष्ठीतत् ) (2) अविद्यमानं लक्षणं यस्या सा अलक्षणा or अविद्यमानलक्षणा ( बहु ) 'प्रादिभ्यो धातुजस्य'—( V प्राञ्जलिना, X, 13. ) (3) स्वर्गप्रतिष्ठस्य—( V. Sanji. ) (4) महिषी च महिषी च ते महिष्यौ ( एकशेषद्वन्द्व ) (5) भक्त्या or भक्तेः भेदः भक्तिभेदः ( षष्ठीतत् ) न भक्तिभेद अभक्तिभेद ( नञ्तत् ) तेन ।

**Case-ending.**—(1) भर्त्तुः—कृद्योगेऽनुक्ते कर्त्तरि षष्ठी—घञ् is a कृत् affix which is admitted to the root क्लिश् in क्लेश । भर्त्ता क्लिश्यति, भर्त्तुः क्लेश— "कर्त्तृकर्मणोः कृति" ( V कार्य्यसिद्धेः, X, 6 ) (2) सीता—निपातनिर्दिष्टेनेतिनाभिहितत्वात् प्रथमा—In alliance with इति which is formed by निपातन, सीता gets प्रथमा (3) इति अव्यय—क्रियाविशेषणम् ( 4 ) नाम—शतृप्रत्ययान्तस्य 'उदीरयन्ती' इत्यस्य योगे द्वितीया (5) अभक्तिभेदेन—प्रकृत्यादिभ्यस्तृतीया (6) गुरोः- शेषे षष्ठी 'महिष्यौ' इत्यनेन सम्बन्धः (7) क्लेशावहा, अलक्षणा and उदीरयन्ती qualify अहम् which is the same case with सीता (8) स्वम् qualifies नाम (9) स्वर्गप्रतिष्ठस्य qualifies गुरोः (10) महिष्यौ—Object of the finite verb ववन्दे ।

**Differeneut meanings.**—(1) स्व—'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' । (मे०) (2) गुरु—( V. X, 64. ) ।

**Derivation.**—(1) क्लेशावहा—क्लिश् + घञ् ( भावे ) क्लेशः । क्लेश + आ + वह् + अच् ( कर्त्तरि ) + टाप् (2) भर्त्तुः—भृ + तृच् (6th c. s.) ( 3 ) सीता—सि + क्त ( कर्मणि ) + टाप्—पृषोदरादित्वात् । The short vowel इ of the root is elongated. भरणि uses तालव्य श for the dental, i. e. शीता, both are used in the same sense. ( 4 ) नाम—म्ना + मन्—म्नायते, कीर्त्त्यते इति ( 5 ) उदीरयन्ती- उत् + ईर् ( चुरादि ) + शतृ + ङीप् (6) गुरोः—( V. X, 64. ) (7) महिष्यौ—मह् + टिषच् + ङीष् ( 2nd c. dual ) (8) वधूः—वह् + ऊः ( कर्मणि )

—ह् of the root changes into भ् by the rule—'वहोधश्च' (उ० ११८३।) (9) ववन्दे—वन्द्+लिट्-ए।

**Conjugation.**—(1) वन्द् (to salute) वन्दते (लट्) ववन्दे (लिट्) वन्दिता (लुट्) वन्दिष्यते (लृट्) अवन्दिष्ट, अवन्दिषाताम्, अवन्दिषत (लुङ्) विवन्दिषते (सन्-लट्) वावन्द्यते (यङ्-लट्) वन्दयति (णिच्-लट्) अववन्दत् (णिच्-लुङ्) वन्दित: (क्त.)।

**Change of voice.**— . . उदीरयन्त्या वध्वा... ववन्दाते।

**Remark.**—There is a delicate touch of the artist's pencil in this S'loka. Sitá was thinking of how to introduce herself to her mothers'-in-law who seemed much affected by the scars of the wounds inflicted on the bodies of Ráma and Lakshmana by the demons Sitá felt vividly in her mind that it was only for her sake that her husband and Lakshmana had to pass through serious troubles, and suffer great physical and mental pain Naturally, she regarded herself as ill-omened; and while in that frame of mind, she advanced towards Kausalyá and Sumitrá, and said 'Here is the ill-omened Sitá who brought so much trouble on her husband."

उत्तिष्ठ वत्से ! ननु सानुजोऽसौ
वृत्तेन भर्त्ता शुचिना तवैव।
कृच्छ्रं महत् तीर्ण इति प्रियार्हां
तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥

**Prose order.**—ननु वत्से! उत्तिष्ठ, असौ सानुज: भर्त्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं तीर्ण:, ते प्रियार्हां ताम् इति प्रियम् अपि अमिथ्या ऊचतु:। Mallinátha places 'ते' after 'अमिथ्या'।

**Explanation by use of synonyms**—ननु (भो:) वत्से! (पुत्रीस्थानीये!) उत्तिष्ठ (उत्थिता भव), असौ (पुरतो दृश्यमान:) सानुज: (सकनिष्ठ:) भर्त्ता (पति:) तवैव (भवत्या एव) शुचिना (पवित्रेण) वृत्तेन

( चरितेन ) महत् ( विपुलं ) कृच्छ्रं ( कष्टं ) तीर्ण ( उत्ततार ) ते ( श्वश्र्वौ ) प्रियार्हां ( प्रियभाषणयोग्यां ) तां ( वधूम् ) इति (पूर्व्वोक्तरूपं ) प्रियमपि [ सुमिष्टमपि ] अमिथ्या ( स म् ) ऊचतु: ( कथयामासतु: )।

**ubstanc** —'अलक्षणाहं पत्युर्वनवासस्य श्वशुरस्य परलोकगतेर्भवत्योर्वैधव्यस्य च कारणम्' इति व्याहृत्य गीताया अभिवादनात् परं ते श्वश्र्वौ—'अयि वत्से जानकि ! 'उत्तिष्ठ' इति तां सादरमुत्थाप्य ऋतमधुरं वच: प्रोचतु — अयि सीते ! तवैव विशुद्धेन चरितेन हेतुना सानुजस्ते पतिर्दुर्द्धर्षनिशाचरसमरोदधिरूपं विपुलं कृच्छ्रमवलीलया समुत्तीर्य्य पुनरयोध्यां प्रत्यावृत्ते—तव पवित्रचारित्रबलमेव ते भर्त्तुर्विशालविपदुदधितरणहेतुरतस्त्वया 'अलक्षणा' इति वाक्यं मा व्याह्रियताम्।

**anjiv ni.**—उत्तिष्ठेति। ( ननु वत्से ! ) [ भो: पुत्रीस्थानीये ! ] ( उत्तिष्ठ ) [ उत्थिता भव ], ( असौ ) [ पुरतो दृश्यमान. ] (सानुज ) [सकनिष्ठ:] ( भर्त्ता ) [ पति. ] ( तव एव ) [ भवत्या एव ] ( शुचिना ) [ विशुद्धेन ] ( वृत्तेन ) [ चरितेन ] ( महत् कृच्छ्रं ) दु.खं ( तीर्ण: ) तीर्णवान्—( इति ) [ एवंरूपां ] ( प्रियार्हां ) [ प्रियभाषणयोग्यां ] ( तां ) वधूं ( प्रियमपि ) [ मधुरमपि ] ( अमिथ्या ) सत्यं ( ते ) श्वश्र्वौ ( ऊचतु. ) [ व्याजह्रतु. ] उभयं दुर्व्वचमिति भाव. ॥ ६ ॥

**anjivani pl in d** ·—(1) 'उभयं दुर्व्वचम्'—Both sweet and true words are spoken hardly.

**Ben li.**—অয়ি বৎসে। উঠ, ( তোমার ) ঐ পতি অনুজের সহিত তোমারই বিশুদ্ধ চরিত্রহেতু মহাসঙ্কট উত্তীর্ণ হইয়াছেন। তাঁহারা প্রিয়বচনপাত্রী তাঁহাকে এইরূপ প্রিয় অথচ সত্য কথা বলিয়াছিলেন। ৬।

**English r nd ring.**—"Rise, Oh daughter. It was only through your virtuous conduct that yonder your husband, along with his younger brother, ( safely ) tided over the great difficulty." Thus spoke they pleasant yet true words to her who deserved kind treatment. ( 6 )

**Gra ımatical note , &c., &c.**

**am ́s .**—(1) अनु ( पश्चात् ) जात: अनुज. ( उपपद ) तेन सह

वर्त्तमानः सानुजः ( वहु ) ( 2 ) अर्हतीति अर्हा, प्रियस्य अर्हा प्रियार्हा (षष्ठीतत्) ताम् ( 3 ) न मिथ्या अमिथ्या ( नञ्तत् )।

**Case-ending.**—( 1 ) वृत्तेन—हेतौ तृतीया ( 2 ) इति—अव्यय, क्रियाविशेषणम् ( 3 ) सानुजः and असौ qualify भर्त्ता ( 4 ) प्रियम् qualifies अमिथ्या which is the direct object of the verb जचतुः। The indirect object is ताम्। The root ब्रू governs double objects. It is under दुहादि class. So in the passive form, the indirect objects shall have प्रथमा विभक्ति।

**Different meanings.**—(1) वृत्त—" वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढ़निस्तले '। ( अ० )।

**Derivation.**—( 1 ) उत्तिष्ठ—उत् + स्था + लोट्—हि। When 'rising up' is meant, the root स्था with the prefix उत् adopts the परस्मैपदीय form.—"उदोऽनूर्द्ध्वकर्म्मणि" ( *V*. X. 3. ) ( 2 ) वत्से—वद् + स + टाप्, तत्सम्बुद्धौ ( 3 ) अनुजः—अनु + जन् + ड: ( कर्त्तरि, भूते ) (4 ) वृत्तेन—वृत् + क्त ( भावे, 3rd c. s. ) ( 5 ) तीर्थः—तॄ + क्तः ( कर्त्तरि ) ( 6 ) प्रियार्हाम्—प्री + कः ( कर्त्तरि ) = प्रियम्। प्रिय + अर्ह् + अच् + टाप् ( 2nd c. s. ) ( 7 ) जचतुः—ब्रू or वच् + लिट् + अतुस् ( 8 ) कृच्छ्रम्—कृत् + रक (औणादिकः ) च comes after the final letter of the root, and, then, by *Sandhi* त् of the root changes into च् ( 9 ) शुचिना—शुच् + इन् ( औणादिकः, 3rd c. s. )।

**Conjugation.**—( 1 ) ब्रू or वच्—(*V*. X. 35. ) ( 2 ) स्था—( *V*. X. 3. ) ( 3 ) तॄ—( *V*. XII. 60. )।

**Ch nge of voice.**—...उत्थीयताम्, असुना सानुजेन भर्त्रा...... तीर्णम्; ताभ्यां प्रियार्हा सा...जचे।

ननु has the force of आमन्त्र here. " सावधारणातु ननयामन्त्रणे ननु"—Amara.

प्रियमपि—अपि indicates the sense of गर्हा। The words that are generally complementary, are not always true. So अपि between प्रिय and अमिथ्या mutually indicates censure. "गर्हासु यमश्च ह्रासम्भावनास्वपि'—अमरः। Manu says :—" ब्रूयात् प्रियं ब्रूया ब्रूयात् सत्यमप्रियम्। प्रियञ्च नानृतं ब्रूयादे धर्म्मः सनातनः"॥

**R m rk.**—The queens spoke truely when they said that it was Sitá's virtuous conduct that enabled Ráma and Lakshmana to get through the crisis safely, of what avail would have been their troubles, if Sitá had been a fickle-minded woman and surrendered herself to Rávana ?

अथाभिषेकं रघुवंशकेतोः
प्रारब्धमानन्दजलैर्जनन्योः ।
मासु निर्वर्त्तयामासुरमात्यवृद्धा-
स्तीर्थाहृतैः ाञ्चनकुम्भतोयैः ॥ ७ ॥

मूलस्य पाठान्तरम्—तीर्थाहृतैः—तीर्थाभृतैः ( Nand. )

**Pros rd r.**—अथ अमा वृद्धाः जनन्योः आनन्दजलैः प्रारब्धं रघु-वंशकेतोः अभिषेकं तीर्थाहृतैः ाञ्चनकुम्भतोयैः निर्वर्त्तयामासुः । Mallinátha places 'अमात्यवृ ाः" after "अभिषे म्" ।

**plan tion by us of synonyms** —अथ (अनन्तरम्) अमा वृद्धाः ( वृद्धसचिवाः ) जनन्योः ( मात्रोः ौशल्यासुमित्रयोः ) आनन्दजलैः ( हर्षजलनेत्राम्बुभिः ) प्रारब्धं ( प्रक्रान्तं ) रघुवंशकेतोः ( रघुकुलध्वजस्य ) अभि-षेकं ( राजसिंहासनोपवेशनाय माङ्गलिकं स्नानं ) तीर्थाहृतैः ( गङ्गाप्रमुखेभ्य आनीतैः ) काञ्चनकुम्भतोयैः ( सुवर्णकलसजलैः ) निर्वर्त्तयामासुः ( सम्पादित-वन्तः ) ।

**ubstanc .**—राजकुमारयोर्दर्शनेन ौशल्यासुमित्रयोर्यानि हर्षजानि नेत्राम्बूनि राममूर्द्धि निपतितानि, तेनैव प्रथमं तस्याभिषे ः सूचितः—ततो वृद्धामात्या गङ्गाप्रमुखेभ्यो बहुतीर्थे ः समाहृतैः का नकुम्भपूर्णै रघुवंशकेतो रामस्याभिषेकक्रियां सानन्दं निष्पादयामासु. ।

**anjiv ni.**— थेति । ( थ ) [ अनन्तरं ] ( जनन्योः ) [ ौ ल्या-सुमित्रयोः ] ( ानन्दजलैः ) आनन्दवाष्पैः ( प्रारब्धं ) प्रक्रान्तं ( रघुवं केतोः ) [ र ुकुलध्वजस्य ] रामस्य ( अभिषेकं ) [ रा सिंहासनोपवेशनाय माङ्गलिकं स्नानम ] ( अमात्यवृद्धाः ) [ वृद्धसचिवाः ] तीर्थेभ्यः, गङ्गाप्रमुखेभ्यः आहृतैः, आनीतैः [ तीर्थाहृतैः ] ( काञ्चनकुम्भतोयैः ) [ सुवर्ण लसजलैः ] (निर्वर्त्तयामासुः) निष्पादयामासुः ॥ ७ ॥

**Bengali.**——অনন্তর বৃদ্ধসচিবগণ, জননীদ্বয়ের হর্ষজনিতনেত্র-জলে আবদ্ধ রঘুবংশকেতু (রামের) অভিষেক, বহুতীর্থ হইতে আনীত স্বুবর্ণকলশস্থিত সলিলে সম্পাদন করিয়াছিলেন। ৭।

**nglish nd ring.**—Then, with waters brought in golden jars from the sacred places (of pilgrimage), the old ministers performed the coronation ceremony of the banner of Raghu's race, which had been (already) commenced by the (shedding of) tears of joy of the two mothers. (7.)

### Gr mm ti al not s, &c., &c.

**ama´sa.**—(1) रघोर्वंश: रघुवंश: (षष्ठीतत्) तस्य केतु: (षष्ठीतत्) तस्य (2) आनन्दजानि ज ानि आनन्दजलानि (शा पार्थिवादित्वान्मध्यपद-लोपीकर्म्मधा) तै: (3) अमा ेषु वृद्धा. अमा वृद्धा: (सप्तमीसमास:) (4) तीर्थभ्य. आहृतानि तीर्थाहृतानि (पञ्चमीतत्) तै: (5) काञ्चननिर्म्मिता. कुम्भा: काञ्चनकुम्भा: (शाकपार्थिवादि.) or, काञ्चनस्य कुम्भा: काञ्चनकुम्भा: (षष्ठीतत्) तेषां तोयानि काञ्चनकुम्भतोयानि (षष्ठीतत्) तै:।

**Cas - nding.**—(1) रघुवंशकेतो:—कृद्योगेऽनुक्ते कर्मणि षष्ठी—Here घञ् is a त् affix, and in alliance with that "केतो:" gets षष्ठी in the place of कर्म्म। This affix is admitted to the root सिच् in अभिषेक। रघुवंशकेतुमभिषिञ्चन्ति—तस्याभिषेक: (2) आनन्दजलै: —अनुक्ते कर्त्तरि तृतीया "प्रारब्धम्" इत्यस्य (3) जनन्यो:—शेषे षष्ठी (4) काञ्चनकुम्भतोयै:—कर े तृतीया (5) तीर्थाहृतै: qualifies काञ्चनकुम्भतोयै.।

**Differ nt m ning .**—(1) केतु—"केतुर्ना द पताकारि-ग्रहोत्पातेषु ल्लक्ष्मणि" (मे०) (2) तीर्थ—"तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरज:सु च। वतारर्षिजुष्टा पात्रोपा ायमन्त्रिषु" ॥ (मे०)

**D riv tion.**—(1) अभिषे म्—अभि+सिच्+घञ् (भावे, 2nd c. s.) (2) ेतु:—चाय्+तु:—चाय् changes into कि (3) प्रारब्धम् प्र+आ+रभ्+क्त: ( र्म्मणि) (4) जनन्यो:—(V. S'1. 1.) (5) निर्वर्त्त-यामासु:—निर्+वृत्+णिच्+लिट्-उ (6) अमा :—अमा+ प्—अमा, सह, मीपे वा भव:—"अव्ययात्त्यप्" (४।२।१०४। पा०) The minister who keeps company with king, and performs royal duties, is called अमात्य (7) तीर्थम्—तॄ+थक्।

**Conjug tion.**—( 1 ) वृत्—( *V*. XI, 30. ) ।

**Chang of voice.**—......अमात्यवृद्धै......प्रारब्धः...अभिषेकः......निर्वर्त्तयामासे ।

**Rem rk.**—अभिषेक is literally the pouring down of holy water on the head of the king at the time of his coronation. The poet says that this ceremony in the case of Ráma was commenced by the tears of joy that the mothers shed over his head, and the ministers only brought it to a close by pouring down water brought from sacred places in golden jars.

सरित्समुद्रान् सर ांसि गत्वा
रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन् मूर्द्धि जलानि जिष्णो-
र्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

मूलस्य पाठान्तरम्—सरित्समुद्रान्—सरित. समुद्रान् ( Su. )

**Pros ord r.**—रक्षःकपीन्द्रैः सरि मुद्रान् सरसीश्च गत्वा उपपादितानि ज ानि जिष्णोः तस्य मूर्द्धि, विन्ध्यस्य ( मूर्द्धि ) मेघप्रभवाः आप इव, अपतन् ।

**E pl nation by us of syn nyms**—रक्षः पीन्द्रैः ( राक्षसवानराधिपैः ) सरि मुद्रान् ( गङ्गाद्याः, पूर्व्वादिसागरान् ) सरसीश्च ( मानससरोवरादींश्च ) गत्वा ( प्रयाय ) उपपादितानि ( आहृतानि ) जलानि ( सलिलानि ) जिष्णोः ( जयशीलस्य ) तस्य (राम ) मूर्द्धि ( शिरसि ), विन्ध्यस्य ( विन्ध्याद्रेः ) मूर्द्धि, मेघप्रभवाः ( ज धरविनिर्मुक्ताः ) आप इव ( तोयानीव ), अपतन् ( पतितवन्ति ) ।

**ubst ce.**—वर्षासु यथा मेघवृन्दैः तान्यम्बूनि उत्तुङ्गे विन्ध्याद्रेः शिरसि धाराभिर्नि पतन्ति, तथा राक्षसवानरश्रेष्ठैः पूर्व्वादिसागरगङ्गादिपवित्र ोत-स्वतीमानसादि रोभ्यः काञ्चन ंभै ानि. प्रपूर्य्य मानीतानि—तानि र्व-तीर्थपूतोदकानि रघुकुलति कस्य राघवस्या चै मूर्द्धनि निपे ः ।

**Sanjivani.**—सरिदिति। ( रक्षःकपीन्द्रैः ) [ राक्षसवानराधिपः ] सरितः, गङ्गाद्याः, समुद्रान्, पूर्व्वादीन् [ गङ्गाद्याः, पूर्व्वादिसागरान् ] ( सरसीः ) मानसादीन् ( च ) ( गत्वा ) [ प्रयाय ] ( उपपादितानि ) उपनीतानि (ज ानि) [ तोयानि ], ( जिष्णोः ) जयशीलस्य—"ग्लाजिस्थश्च ग्स्नुः" ( ३।२।१३९। पा० ) इति ग्स्नु प्रत्ययः—( तस्य ) रामस्य ( मूर्द्ध्नि ) [ शिरसि ] ( विन्ध्यस्य ) विन्ध्याद्रेः मूर्द्ध्नि ( मेघप्रभवाः ) [ जलधरविनिःसृताः ] ( आप इव ) [ तोयानीव ] ( अपतन् ) [ निपेतुः ] ।

**ajivani Explained**—( 1 ) "ग्लाजिस्थश्च ग्स्नुः"—[ The roots ग्लै, जि and स्था admit the affix ग्स्नु in the sense of habit. ]

**Bengali.**—নদী, সমুদ্র এবং সরোবরসমূহে গমন করিয়া রক্ষঃশ্রেষ্ঠ এবং কপীন্দ্রগণকর্ত্তৃক সমানীত জল, জয়শীল সেই রামের মস্তকে, বিন্ধ্যগিরির ( শীর্ষদেশে ) মেঘবিনিঃসৃত বারিধারার ন্যায়, নিপতিত হইয়াছিল। ৮।

**English r nd ring.**—The waters fetched by the chiefs of the demons and monkeys who went to rivers, seas and lakes ( for the purpose ), fell on the head of him who was victorious, like waters poured down by clouds on the head of the Vindya mountain. ( 8. )

### Gr mmatical notes, &c., &c.

**ama a.**—( 1 ) सरितश्च समुद्राश्च सरित्समुद्राः ( द्वन्द्वः ) तान् ( 2 ) रक्षांसि च कपयश्च ते रक्षःकपयः ( द्वन्द्वः ) तेषामिन्द्राः रक्षःकपीन्द्राः ( षष्ठीतत् ) तैः ( 3 ) मेघः प्रभवो यासां ताः मेघप्रभवाः ( बहु ) or मेघात् प्रभवः, उत्पत्ति-र्यासां ताः ( व्यधिकरणबहु ) "अव र्गि हि बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद" ( *V.* ri वृत्तिः, ५ अधि, २ अध्यायः, १९ सू० ) Vámana and others do not acknowledge व्यधिकरण बहुव्रीहि, except when जन्मन्, भव, प्रभव, उत्पत्ति &c. are उत्तरपद। The latter expression is preferable after Vámana.

**C - nding.**—( 1 ) रक्षःकपीन्द्रैः—अनुक्ते कर्त्तरि तृतीया ( 2 त —शेषे षष्ठी 'मूर्द्ध्नि' इ नैव ग्वः ( 3 ) मूर्द्ध्नि—आधाराधिकरणे सप्तमी

( 4 ) विन्ध्यस्य— This is विधेय and उपमान, having for its उद्देश्य and उपमेय, तस्य ( 5 ) मेघप्रभवाः qualifies आपः which is विधेय and उपमान having for its उद्देश्य and उपमेय, जलानि ( 6 ) उपपादितानि qualifies जलानि ( 7 ) सरित्समुद्रान् and सरसीः—Objects of गत्वा ( 8 ) जिष्णोः qualifies तस्य ( 9 ) आप and जलानि are the nominatives of the finite verb अपतन् ।

**Derivation.**—( 1 ) सरित्—सृ + इतिः ( औणादिकः ) (2) समुद्रः —सम् + उन्द् + रक् ( 3 ) सरसी.—सृ + असुन् + ङीष् ( 2nd c. p.) The word सरस् is neuter, but the feminine form is रसी—The addition of ङीष् to रस् is anomalonsly formed ( 4 ) रक्षः—रक्ष् + असुन् ( औणादिकः ) ( 5 ) कपिः—कम्प् + इन्—न् of the root कम्प् elides by the rule,—' कुकम्प्योर्नलोपश्च' ( उ० ४।१४४। ) ( 6 ) उपपादितानि—उप + पद् + णिच् + क्त ( भौवि, 1st c. p. ) ( 7 ) अपतन्—पत् + लङ्-दिप् ( 8 ) मूर्द्धि—( *V.* X, 73. ) ( 9 ) जिष्णोः—जि + ग्स्नु: ( भौलार्थ, 6th c. p. ) "ग्लाजिस्थश्च ग्स्नुः" ( *V.* Sanji. Exp. ) ( 10 ) प्रभवः—प्र + भू + अप् ( अपादाने, or भावे ) ( 11 ) आपः—आप् + क्विप् ( 1st c. p. ) 'आप्नोतेर्ह्रस्वश्च' ( उ० २।५८। ) The long vowel आ of the root is shortened. The word अप् is always feminine plural.

**Conjug tion.**—( 1 ) पत्—( *V.* XI, 76. ) ।

**Ch ng of v ic .**— .. उपपादितैः ......मेघप्रभवाभिः अद्भिः ...अपत्यत ।

**Rem rk.**—As rains fall on the head of the Vindhya mountain, so waters brought by the chiefs of demons and monkeys from rivers, seas, and lakes poured down on the head of Râma at the time of his installation.

तपस्विवेशक्रिययापि तावद्
यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा
शोदितासीत् पुनरुक्तदोषा ॥ ६ ॥

मूलस्य पाठान्तरम्—पुनरुक्तदोषा—पुनरुक्तिदोषा ( Nand. )

**Pr s ord r.**—यः तपस्विवे क्रियया अपि सुतरां प्रेक्षणीयः तावत् बभूव, तस्य राजेन्द्रनेपथ्यविधान शोभा उदिता पुनरुक्तदोषा सीत् ।

**Expl n ti n by us of ynonym** :—यः ( रामः ) तपस्विवेशक्रियया अपि ( ताप वेशरचनयापि ) सुतराम् ( अत्यन्तं ) प्रेक्षणीय. तावत् ( निश्चितं दर्शनीयः ) बभूव ( आ ीत् ), तस्य (रामस्य) राजेन्द्रनेपथ्यविधानशोभा ( नृपतिवरवेशरचनाश्रीः ) उदिता ( प्रकाशिता ) पुनरुक्तदोषा ( उक्तस्य पु रुक्त-वद् द्विगुणा ) आसीत् ( अभूत् ) ।

**ub t nce.**—निसर्गसुन्दरो रामो वनप्रयाणकाले जटावल्कलादिकं ताप वेशं धृत्वापि परमरमणीयदर्शनोऽभूत्—कथितस्य कथनं यथा पुनरुक्तदोष. तथैव स्वभावसुन्दरश रीयाकृते रामस्य राजेन्द्रवेशविधानशोभा । निसर्गसुन्दर-रामशरीरे राजवेशविधानं निष्प्रयोजनमिति भावः ।

**anjiv ni.**—तपस्वीति । ( य· ) रामः ( तपस्विवेशक्रियया अपि ) [ तापसवेशधारणेनापि ] ( सुतराम् ) अत्यन्तं ( प्रेक्षणीयः ) ( तावत् ) द र्शनीयः एव ( बभूव ) [ भूत् ], ( त ) [ राघवस्य ] राजेन्द्रनेपथ्यविधानेन ( उदिता ) [ उत्पन्ना ] या शोभा [ राजेन्द्रनेपथ्यविधानशोभा ] [ नृपवरवेशरचनाकान्तिः ] सा पुनरुक्तं नाम दोषो यस्याः सा ( पुनरुक्तदोषा ) [ उक्तस्य पुनरुक्तदोषदुष्टा ] द्विगुणा ( आसीत् ) [ बभूव ] ॥ ९ ॥

**n ali.**—যিনি তপস্বিবেশক্রিয়াতেও অত্যন্ত দর্শনীয় হইয়াছিলেন, তাঁহার রাজেন্দ্রবেশবিধানোৎপন্না শোভা পুনরুক্তদোষের ন্যায় লক্ষিত হইয়াছিল । ৯ ।

**ngli h r nd ring.**—In the case of him who, even by putting on the dress of an ascetic, assuredly looked very beautiful, the beauty arising from the wearing of royal robes, when exhibited, had the fault of repetition. ( 9 ).

### Gr m tic l not , &c., &c.

.—( 1 ) तपस्विनः वेशः तपस्विवेशः ( षष्ठीतत् ) त क्रिया तपस्विवे क्रिया ( ष ीतत् ) तया ( 2 ) राजा इन्द्र इव रा न्द्रः (उपमित :) or राज्ञाम् इन्द्रः ( षष्ठीतत् ) त पथ्यं राजेन्द्रनेपथ्यम् (षष्ठीतत्) त विधा

राजेन्द्रनेपथ्यविधानम् (षष्ठीतत्) तेन शोभा राजेन्द्रनेपथ्यविधानशोभा (तृतीयातत्) (3) पुन. उ ' पुनरुक्तम् (सुप्सुपा) तत् दोषः यस्याः सा पुनरुक्तदोषा (बहु)।

**C s - nding.**—(1) तपस्विवे क्रियया—करणे तृतीया (2) सुतराम्—अ यं, क्रियाविशेषणम् (3) पुनरुक्तदोषा and उदिता qualifies राजेन्द्र ..शोभा।

**Diffe nt meanings.**—(1) 'नैपथ्य—नेपथ्यं तु प्रसाधनं। रङ्गभूमौ वेषभेदे' (मे.)।

**Deriv tion.**—(1) 'नैपथ्यम्—नी + क्विप्=नै। पथिन् + यत् (अनपेतार्थे) निनः नेतृस्य, नेर्नेतुर्वा पथ्यम्—Bhánuji. (2) सुतराम्—सु + तरप्—आमु is admitted, because द्रव्यप्रकर्ष (quality of a thing) is not intended. प्रेक्षणीय is an adjective word and not a thing. Therefore, सुतराम् does not qualify a thing, so आमु is admitted. (3) क्रिया—कृ + श (भावे) + टाप् (4) प्रेक्षणीयः—प्र + ईक्ष् + अनीयर् (कर्मणि) (5) शोभा—शुभ् + अङ्—भिदादित्वात् (6) उदिता—उत् + इ + क्तः (कर्तरि) + टाप्। Or in the sense of 'spoken' it may be derived thus —वद् + क्तः (कर्मणि) + टाप—उदिता means कथिता (7) बभूव—भू + लिट्—णल् (8) आसीत्—अस् + लङ्—तिप्।

**C njug ti n.**—(1) भू— (*V.* X, 36.) (2) अस् (*V.* X, 57)।

**Ch ng f v ic .**—येन...प्रेक्षणीयेन बभूवे, उदितया राजेन्द्रनेपथ्यविधानशोभया पुनरुक्तदोषया अभूयत।

**F rc f** अपि in तपस्विवेशक्रिययापि, is गर्हा। The garb of an anchorite can mar one's beauty, but Ráma was so naturally charming and beautiful that the dress of an anchorite could not change his natural beauty at the time of his exile. So censure (गर्हा) is in the part of तपस्विवेशक्रिया।

तावत् indicates अवधारण। Certainly Ráma's natural beauty was not changed by the garb of an anchorite. In that state he looked very beautiful.

**rk.**—The idea is this : Ráma was naturally beau-

tiful. Even in the garb of an ascetic, he looked charming. The putting on of royal robes did not add anything to his naturual beauty.

स मौलरक्षोहरिभिः ससैन्य-
स्तूर्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षा-
मुत्तोरणामन्वयराजधानीम् ॥ १० ॥

मूलस्य पाठान्तरम्—मौलरक्षोहरिभिः ससैन्यः—मौलरक्षोहरिमिश्रसैन्यः (He. Vijay. Va. ) पौरवर्गः—पौरवर्गाम् ( Su. Vijay. Va. Din. ) राजमार्गम् ( Nand. )

**Prose order.**—स ससैन्यः तूर्यस्वनानन्दितपौरवर्गः मौलरक्षोहरिभिः ( सह ) सौधोद्गतलाजवर्षाम् उत्तोरणाम् अन्वयराजधानीं विवेश।

**Explanation by use of synonyms.**—सः ( रामः ) ससैन्यः ( सबलः ) तूर्यस्वनानन्दितपौरवर्गः ( मङ्गलवाद्यध्वनिना प्रमोदितनागरिकनिचयः ) मौलरक्षोहरिभिः ( मन्त्रिवृन्दैः राक्षसकपिभिश्च सह ) सौधोद्गतलाजवर्षां ( सुधाधवलितहर्म्यनिचयेभ्यः विसृष्टलाजवृष्टिम् ) उत्तोरणाम् ( उच्छ्रितवाह्यद्वाराम् ) अन्वयराजधानीं ( रघुकुलराजनगरीम्, अयोध्यामिति यावत् ) विवेश ( प्राविशत् )।

**Substance.**—अयोध्याया उपवनपटभवनेषु रामस्याभिषेकानन्तरं रघुनन्दनः सबलः सन् वृद्धामात्यैः राक्षसैः कपिभिश्च सह कुलराजधानीमयोध्यां प्रविवेश—तदा मङ्गलवाद्यध्वनिभिः पुरवासिनो विपुलम् आनन्दं भेजुः—राजवर्त्मानि उन्नतैः तोरणैः समलङ्कृतान्यासन्—पौराङ्गनाश्च मङ्गललाजाञ्जलिं सुधाधवलितहर्म्यशिखरेभ्योऽवाकिरन्।

**Sanjivani.**—स इति। ( सः ) रामः ( ससैन्यः ) [ सबलः ] तूर्यस्वनैः आनन्दितपौरवर्गः [ तूर्यस्वनानन्दितपौरवर्गः ] [ मङ्गलवाद्यध्वनिभिः प्रमोदितनागरिकचयः ] मूल—मूले भवाः मौलाः, मन्त्रिवृद्धाः तैः रक्षोभिः हरिभिश्च [ मौलरक्षोहरिभिः ] [ मन्त्रिभिः राक्षसकपिभिः ] सह, सौधेभ्यः उद्गता लाजवर्षा [ सौधोद्गतलाजवर्षां ] [ सुधाधवलितहर्म्यनिचयविसृष्टलाजवृष्टिम् ] ( उत्तोरणाम् )

[ उच्छ्रितवाद्यगोपुराम् ] (अन्वयराजधानी) [ कुलराजनगरीम् ] अयोध्यां (विवेश) प्रविष्टवान् ॥ १० ॥

**n li.**—তিনি সসৈন্যে এবং মন্ত্রিবৃদ্ধ রাক্ষস ও কপিবৃন্দের সহিত (মঙ্গল) বাদ্যধ্বনিদ্বারা পৌরবর্গের আনন্দবিধান করিয়া কুলরাজধানী (অযোধ্যা) প্রবেশ করিয়াছিলেন—(তৎকালে উক্ত রাজধানী) উন্নত তোরণ সমূহে অলঙ্কৃত হইয়াছিল এবং (পৌরাঙ্গনাকর্তৃক) সৌধশিখর হইতে লাজাঞ্জলি বৃষ্ট হইয়াছিল। ১০।

**ngli h r nd ring.**—Accompanied by aged ministers, demons and monkeys, escorted by his army, and gladdening the cityzens by the sound of trumpets, he entered the capital of his fore-fathers, in which triumphal arches had been erected, and from the white washed houses of which *la'jas* were being showered. ( 10. )

### Gr tic l not s, &c., &c.

**m ´ .**—( 1 ) ैन्यैः सह वर्त्तमानः ससैन्यः or सहसैन्यः ( बहु ) ( 2 ) तूर्य्याणां ॱनाः तूर्य्यस्वनाः ( षष्ठीतत् ) तैः आनन्दितः तूर्य्य ॱनानन्दितः ( तृतीयातत् ) पौराणां वर्गः, पौरवर्गः ( षष्ठीतत् ) तूर्य्यस्वनानन्दितः पौरवर्गः येन स तूर्य्यस्वनानन्दितपौरवर्गः ( बहु ) ( 3 ) मौलाश्च रक्षांसि च हरयश्च ते मौलरक्षोहरयः ( द्वन्द्वः ) तैः ( 4 ) ध्वं गतानि उन्नतानि ( प्रादिः ) लाजानां वर्षाणि लाजवर्षाणि ( षष्ठीतत् ) ौधे उन्नतानि ौधोन्नतानि ( पञ्चमीतत् ) ताद ानि लाजवर्षाणि यस्यां सा सौधोन्नतलाजवर्षा ( बहु ) ताम् ( 5 ) उन्नताः तोरणाः यस्यां सा उन्तोरणा ( बहु ) ताम् ( 6 ) धीयतेऽस्यामिति धानी, राज्ञो धानी राजधानी ( षष्ठीतत् ) ___ यस्य रा धानी अन्वयराजधानी ( षष्ठीतत् ) ताम् ।

**C - ndi .**—(1) सौधोन्नतलाजवर्षाम् and उन्तोरणाम् qualify अन्वयराजधानीम् which is the accusative of the verb 'विवेश' ( 2 ) स ैन्यः and तूर्य्य ॱनानन्दितपौरवर्गः qualify : which refers to Ráma ( 3 ) तै रक्षोहरिभिः—' ' योगे तृतीया—'सह' is understood here.

**Different m ning** .—(1) हरि—( *V*. XIII. 72. ) (2) लाज—लाजः स्यादार्द्रतण्डुले। नपुंसकमुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते' ( मे० )।

**Derivation.**—( 1 ) ैन्यम्—सेना + ष्यञ् (2) तूर्य्यम्—तूर् + यत् ( कर्म्मणि ) ( 3 ) आनन्दितः—आ + नन्द् + णिच् + क्तः ( र्म्मणि ) ( 4 ) पौरः —पुरे भव इति पुर + अण् ( 5 ) मौलाः—मूले भवा इति मूल + अण् ( 6 ) सौधम्—सुधा, लेपोऽस्यास्ति इति सुधा + अण्—ज्योत् ादिलात्। The word सौध is both masculine and neuter. ( 7 ) लाजाः—लज् + घञ् ( र्म्मणि ) The word लाज is always masculine and plural. Some words are always used as masculine plural :—प्राण, असु ( life ),दार ( wife ), लाज ( fried paddy, 'खइ' इति भाषा ), बल्वज ( a kind of grass ), गृह ( house, wife ) सक्तु (barley-powder) &c. ( 8 ) तोरणः—तुर् + ल्युट् ( अधिकर ) The word तोर is both masculine and neuter as says Amara—"तोरणोऽस्त्री वहिर्द्वारम्"( 9 ) न्वयः—अनु + इ + अच् ( कर्म्मणि ) ( 10 ) विवे —वि + लिट् + णल्।

**C nju tion.**—( 1 ) विश्—( to enter ) विशति ( ट् ) विवे विवेशिथ ( लिट् ) वेष्टा ( लुट् ) वेक्ष्यति ( ट् ) अविक्षत्, अविक्षताम्, अविक्षन् ( लुङ् ) वेशयति ( णिच्-लट् ) अवीविशत् ( णिच्-ुङ् ) विविक्षति ( सन्—लट् ) वेविश्यते ( यङ्-लट् ) विष्टः ( क्तः )।

**Change of voice.**—तेन ससैन्येन तूर्य्यस्वनानन्दितपौरवर्गेण... सौधोद्गत लाजवर्षा उत्तोरणा अन्वयराजधानी विविशे।

**R mark.**—Ráma made a royal entry into his capital, accompanied by his aged ministers, monkeys and demons and escorted by his army. There were flourishes of trumpets, announcing to the people the arrival of the royal party, which greatly pleased the mind of the populace. Triumphal arches were erected over streets, welcoming the Royal party, and *lájas* ( fried paddy ) were being showered as the royal procession passed. The strewing of *lájas* is regarded by Hindus to be an auspicious act.

सौमित्रिणा सावरजेन मन्द-
माधूतबालव्यजनो रथस्थः।
धृतातपत्रो भरतेन साक्षा-
दुपायसङ्घात इव प्रवृद्धः॥ ११॥

मूलस्य पाठान्तरम्—प्रवृद्ध—प्रसिद्धः (Vijay. Su.) प्रवृत्त. (Va.)।

**Prose order.**—सावरजेन सौमित्रिणा मन्दम् आधूतबालव्यजन· रथ ·भरतेन धृतातपत्र (राम.) प्रवृद्ध· साक्षात् उपायसङ्घात इव (विवेश)।

**planation by use of synonyms**:—सावरजेन (नुजयु न) सौमित्रिणा (लक्ष्मणेन) मन्दं (शनैर्यथा तथा) आधूतबाल-व्यजनः (ईषत्कम्पितचामर) रथस्थ (स्यन्दनासीन·) भरतेन (कैकेयीनन्द-नेन) धृतातपत्रः (धृतच्छत्रः) रामः, प्रवृद्धः (वृद्धिं प्राप्तः) साक्षात् (विग्रहवान्) उपायसङ्घात इव (सामाद्युपायचतुष्टयमिव) विवे ।

**Subst nce.**—रामः स्यन्दनासीन आसीत्। लक्ष्मणशत्रुघ्नौ शनै· शनैश्चामरं वीजयामासतुः—भरतस्तु अग्रजस्य शिरसि आतपत्रं धृतवान्—इत्थं रामादयश्चत्वारोभ्रातरः परस्परयोगात् प्रकर्षेण वृद्धिं गत. धृतविग्रहः सामाद्यु-पायसमूह इव शुशुभे। तथा दृश्यमानो रघुनन्दनो राजधानीं प्रविवेश।

**njiv ni.**—सौमित्रिणेति। (सावर न) अनुजयुक्त न (सौमि-त्रिणा) लक्ष्मणेन (मन्दम्) [धीरं यथा तथा] आधूते बालव्यजने, चामरे यस्य स. [आधूतबालव्यजनः] [ईषत्कम्पितचामरः] (रथस्थ.) [स्यन्दनासीनः] (भरतेन) [ कैयीनन्दनेन] (धृतातपत्रः) [धृतच्छत्रः] एवं चतुर्व्यूहो रामः (प्रवृद्धः) [प्र र्षेण वृद्धिं गतः] (साक्षात्) [मूर्त्तिमान्] उपायानां सामादीनां सङ्घातः, मिष्टः [उपायसङ्घात] [सामादिसम्मिष्ट.] (इव)—विवेशेति पूर्व्वे सम्बन्धः॥ ११॥

**li.**—রাম রথস্থ, সানুজ সৌমিত্রি ধীরে ধীরে চামর ব্যজন করিতেছিলেন। ভরত (ম ্তকোপরি) আতপত্রধারণ করিয়াছিলেন—এইরূপে যেন রাম প্রবৃদ্ধ মূর্ত্তিমান্ উপায়সমষ্টির ন্যায় (অযোধ্যাপ্রবেশ করিয়াছিলেন)। ১১।

**li h r nd rin .**—He, seated on the chariot, with

